उक्षध्वजाक्षोभ्यमाहात्म्य यक्षेशमित्रारविन्दाक्षसम्पूजिताङ्घ्रे सदा भक्तरक्षार्थमाबद्धदीक्षागजाकान्त दक्षाध्वरध्वंसक क्षोभहारिन् !

त्रिपुरहर ! मुनेः[1] पर्णभक्षस्य पुत्रं क्षमाशालिनः काङ्क्षमाणं चिरञ्जीवितां क्षीणमायुष्यमालोक्य ते पादपद्मार्चकं त्वत्कटाक्षं प्रतीक्षन्तम्[2] उद्दिश्य यातः समालक्षयन् क्रूरमाचक्षमाणो वृतोऽलक्ष्य-सङ्ख्यैर्गणैः क्षोभयन्नीक्षणेनैव मृत्युर्महादेव तं यावदाभीषयामास तावत्तदीयेन रक्षेति वाक्येन दीनस्वरेणानुकम्पाद्रवीभूतचित्तेन हत्वा च मृत्युं त्वया रक्षितो भक्तवर्यः पुनः सोऽपि मृत्युश्च सञ्जीवितोऽयम् ।

वरद ! तदितरे चापि ते साधवः पालिता एव शिष्टा निहत्यैव दुष्टान् तपोभिर्गरिष्ठैर्वरिष्ठैर्वसिष्ठादिभिः स्तुत्य ! कष्टानि मे नाशयाष्टाभिरिन्द्रादिभिर्दिङ्नृपैश्चाष्टमूर्ते [3]कनिष्ठस्य दुष्टस्य नष्टस्य[4] सत्कर्मणाभीष्टमिच्छोः[5] प्रकृष्टस्य गर्वेण बुद्ध्या निकृष्टस्य पापेन हृष्टस्य[6] सन्तुष्ट भक्तेषु शम्भो ! दयां त्वं कुरुष्वोपरि श्रीशिव ! क्षम्यतां मेऽपराधो नमस्ते नमः ॥"

---

1. मृकण्डोः ।

2. परस्मैपदं चिन्त्यम् । अथवा 'त्वत्कटाक्षप्रतीक्षं तम्' इति शोधनीयः कोशपाठः ।

3. भूतपञ्चकसूर्याचन्द्रमसयजमानरूपतया अष्टमूर्तित्वं शिवस्य प्रसिद्धमेव । अष्टदिक्पालरूपतयाप्यत्राष्टमूर्तित्वं भगवत उत्प्रेक्ष्यत इव । अथवा 'दिङ्नृपैः स्तुत्य' इति दूरान्वयेन दण्डकशैलीप्रयुक्तेन समर्थनम् ॥

4. कनिष्ठो निकृष्टः । कनिष्ठ-दुष्ट-नष्ट-पदैः स्वात्मनि नैच्यानुसन्धानम् ।

5. सत्कर्म इतःपरमनुष्ठाय भगवदभीष्टं तत्संकल्पानुविधानं चिकीर्षोः ।

6. गर्वेण प्रकृष्टस्य, बुद्ध्या निकृष्टस्य, पापेन हृष्टस्येति स्वात्मनिन्दा । तादृशस्य उपरि, मे इति च उपरि दृश्यमानेन अन्वयः । अन्तरा 'भक्तेषु सन्तुष्ट' इति भगवत्संबोधनम् ।

इति स्तुत्वा स कुलोत्तुङ्गः—

"देहं पुत्रकलत्रबन्धव इमे जीवोऽप्यहं चापि यद्
गेहं द्रव्यसुवर्णधान्यमणयः सर्वेन्द्रियाणि प्रभो ।
सर्वं तद् भगवन् त्वदीयमगजाजाने समस्तार्तिहन्
तुभ्यं श्रीशिव दत्तमेव सहतां शम्भोऽपराधान् भवान् ॥" १२

इत्यात्मानं समर्प्य शिवाय तन्निवेदितेन षड्रसेनान्नेनाहारमकरोत् । एवं प्रतिदिनमेवंपददूरगस्य[1] देवाधिदेवस्य सेवां रचयतस्तस्य व्यतिचक्रमुः कतिचिद्दिनानि । अथ तदन्तःकरणसदने सदा विकासशालिनीं चतुर्विधपुरुषार्थफलदायिनीं शिवभक्तिमुपसेवितुकामयेव निवृत्त्या यथा यथा प्रापि तथा तथा सापत्न्यदुःखासहिष्णुतयेव न्यवर्ति प्रवृत्त्या । ततः—

भोगान् रोगानिवोच्चैर्निधनमिव धनं मन्यमानो महात्मा
देहं गेहं विपत्तेरिव सुखमसुखं केवलं नश्वरत्वात् ।
बन्धूनन्धू[2]निवासौ वनमिव भवनं शल्यवत् पुष्पमाल्यं
पुत्रान् शत्रूनिवाभूच्छशधरकलिकाचूडविन्यस्तचित्तः॥१३॥

अथ कदाचित्—

वैराग्यं भजतस्तादृक्कीर्तिमाकर्ण्य कौतुकात् ।
दिदृक्षयेव वर्षाभिः कृतहर्षाभिरागतम् ॥ १४ ॥

यत्र च वसन्तीनां रमणीनां मनोहरहारमणीनां मन्दगमननिर्जितगतिविलासै राजहंसैर्गम्भीरेषु गिरिकन्दरेषु लज्जयेव निलिल्ये । कठिनतरसूरकिरणसन्तापितां भुवं शीतलयितुं

1. ईदृक्तया परिच्छेदासहस्य ।
2. कूपान् ।

अमृतवर्षैरिव समुत्पादितहर्षैः कर्षकजनतर्षसुपूरणचणैः तरङ्गिणीवृद्धिनिपुणैर्मधुरगुणैर्धारागणैर्गगनाङ्गणमाच्छाद्य रसिताप्रदेशतस्तपतो मिहिरस्य तापतो न किंचिद्भयमिति जल्पद्भिरिव कल्पयद्भिर्भुवनसौख्यं सूरकिरणपरिणामतां सूचयितुमिवात्मनः प्रकाश्य विद्युतः क्षणे क्षणे वर्षितुमम्बुधरैरारेभे । अम्बुधराणां सुखवर्षतामुपदात्वेन कल्पितेनेव विकसतामर्जुनकुसुमानामामोदेन प्रसस्रे गगनतले—

कोकस्तनी विकचपङ्कजचारुहस्ता
फेनस्मिता रुचिरनीलसरोरुहाक्षी ।
आवर्तनाभिसुभगा युवतीव कान्तं
वर्षानदी जलनिधिं द्रुतमाप तोषात् ॥ १५ ॥

एवं क्रमेण प्रवृत्तासु वर्षासु गिरिवरसुन्दरकन्दरान्तरप्रारभ्यमाणशिखण्डिताण्डवासु मदनमहाराजविजयघोषणायमानकेकिकेकारवमण्डितदशदिशासु खण्डितमानिनीमानासु दण्डितधार्तराष्ट्रासु[1] आखण्डलधनुर्दण्डसमलङ्कृतगगनमण्डलासु कदाचित् प्रचण्डतरधाराधरनिस्सरज्जलधारासहस्रनिरन्तराले गगनान्तराले कदम्बकुसुमकदम्बकोद्गारिसुगन्धवाहिन्यङ्गीकृतमन्दिमनि वहति गन्धवहे तस्मै सपत्नीकाय—

यक्षाधीशसखः शिवः सुरनुतः पक्षीन्द्रवाहार्चितः
द्राक्षास्वादुवचाः कटाक्षलवतो रक्षां वितन्वन् सदा ।
त्र्यक्षो विप्रवराकृतिं सुखकरीं [2]दक्षाय चादर्शयत्
प्रक्षीणाघचयाय सुन्दरतरां दक्षाध्वरध्वंसकः ॥ १७ ॥

1. धार्तराष्ट्रा हंसविशेषाः ।
2. समर्थाय ।

अथ तदानीमेव निदानभूतं सुखपरम्परायाः प्रदानकृतमभयस्य, सदा नमनशीलोऽयं ब्राह्मणानाम् , दिशि दिशि प्रसरता तिरस्कृतभास्करतेजसा महसा सहसा तमसां राशिं विनाशयन्तम् , नाशयन्तं मलीमसां चित्तवृत्तिम् , सुरसायमाणमृदुवचसा द्राक्षारसानभिभवन्तम् , पाथसा पयोमुचामार्द्रीकृतवाससा परिवेष्टितम् , श्रुतिसंपुटरत्नभूतस्य चिरत्नस्य शिवनाम्नो जपाद् अमृतमिव वर्षन्तं श्रवणयोः, अत्यद्भुतलक्षणं लक्षणवेदिनं कुहनाब्राह्मणमालोक्य झटिति सपत्नीकः कुलोत्तुङ्गः प्रत्युद्गम्य तं स्वगृहमानीय, शीतबाधानिवारके निर्मले वाससी परिधाप्य हंसतूलकल्पितसुखास्तरणे सुवर्णमये सिंहासने उपवेश्य, भक्तिपूतेन षड्रसोपेतेन मधुरप्रधानेन मृष्टान्नेन च सन्तर्प्य उपचर्य ताम्बूलादिकेन, सुखोपविष्टस्य तस्य पदकमलयोर्विरचयन् शुश्रूषणमवादीत् ॥

"भगवन् ! अद्यैव पुण्यानि परिपेचिरे, अद्यैव साफल्यमापि सदनेन, अद्यैव फलितानि महतामाशीर्वचनानि, अद्यैव मे कृतार्थाः पूर्वजाः, अद्यैव कृतकृत्योऽजनि दासजनोऽयम् , इतरथा कथं पात्रं भवेदीदृशानां महतामुत्सवानाम्" इति । एतदाकर्ण्य कर्णयुगलभूषणं भाषणं तदीयं सञ्जाततोषो गृहीतद्विजवेषोऽयं विगलितसकलदोषाय कृषीवलाय आशीर्वचनमवादीत्—"अये भद्राकृते शूद्रकुलावतंस ! त्वं द्रागाप्नुहि राज्यपदवीम्" इति । अथ तदाकर्ण्य नातिहृष्टमना वरिष्ठमतिरयं गरिष्ठमहिमानं प्रकृष्टतरेण वचसा वसिष्ठमपि निकृष्टयन्तं स्फुटं तमाचष्ट—"भगवन् ! राज्यं नाम विलासभवनं महदनर्थपरम्पराणाम् । तथा हि—राजास्मीति दुर्वारगर्वपर्याकुलहृदयतया दारिद्र्येण सहैव बहिर्निस्सृतो विवेकः, उभयभागसमुच्चलच्चामरवीजनेनैव निवारित इव

स्थाप्यमानोऽपि प्रियसुहृद्भिः न पुनः पदं तस्मिन् समाधत्ते । पट्टाभिषेकसमये शिरसि निवेश्यमाननवरत्नमयकिरीटभारासहनतयेव स्वभावकोमला विनयनम्रता तस्य दूरमपसर्पति । उपरि धार्यमाणपरिपूर्णचन्द्रमण्डलानुकारिधवलातपत्रच्छायामण्डलीव मूर्खता क्रूरता च आचूडमानखमभिव्याप्य न तं परिजहाति । पाणिनिसूत्रप्रतिपादितेव तस्यापि वृद्धिर्गुणबाधिनी भवति । छन्दःशास्त्रादिव प्रकटितशार्दूलविक्रीडितात् तन्मनसो हरिणीव धर्मवासना कृपया साकं दूरमुत्प्लवते । पाणिनीयसूत्रेणेव वसुदत्वकथाप्रसक्तौ सान्तत्वमिच्छता[1] तेन समुपलाल्यमानः लिप्सातिशयः[2] पञ्चमहापातकेषु द्वयोरेकस्य च समाचरणहेतुकौ कामक्रोधौ तृणाय मन्यमानः पञ्चापि स्वयं कारयन् क्षणे क्षणे सम्मूर्च्छति । मूर्खतासमालिङ्गनपरवशहृदयतया विस्मृतलोकतन्त्रः समुन्मत्त इव यानि कानिचिदक्षराणि प्रलपति । आविष्ट इव पिशाचेन परमतं नानुतिष्ठते । चित्रविन्यस्त इव न हितानि शृणोति । वारणेन्द्र इव शिरःकम्पमाचरन्नपि च खेदयति तान् हितकर्तॄन् ; राज्यं हि अपेयं मद्यम्, अचिकित्स्यो व्याधिः, अमन्त्रपरिहरणीयं विषम् । तत्र को नाम विश्वसेत्, केन वा तदङ्गीक्रियेत, को वा तस्मिन्नभिरमेत्, को वा तस्मै स्पृहयेत्? सर्वथा परिहरणीये कथं भवादृशो मामनुबध्नाति" इति ॥

मधुरतरां गिरमाकर्ण्य कृतमन्दहसनः कुहनाद्विजोऽप्येवमवादीत्—"अये आयुष्मन् वत्स! प्रदर्शिता भवता ये

---

1. वसुदत्वं धनप्रदायित्वम् । तत्प्रसक्तौ सान्तत्वं विरामः । त्यागे अनुदारतेति यावत् । पाणिनिसूत्रपक्षे "वसुस्रंसुध्वंस्वनडुहां दः" (८-२-७२) इति वस्वन्तस्य द-विधानं सान्तत्व एव इष्यत इति ।

2. लोभः ।

दोषाः सर्वेऽपि ते खर्वेतराश्च शर्वप्रसादहीने गर्वोत्तरे सम्भवन्ति, न तु शिवप्रसादसम्पन्ने । राज्यं हि नाम साधनं धर्मस्य । तथा हि—धर्मश्च कर्तुमकर्तुमन्यथयितुमीश्वरस्य विचित्रशक्तेः परमात्मनः शिवस्य आज्ञानुल्लङ्घनम् । आज्ञा च तावत् सकलचराचरप्राणिमात्रसुखविधायिनी भगवती महाप्रभावा श्रुतिः । अनुल्लङ्घनं च तत्प्रतिपादितानुष्ठानं तदितरस्य चाननुष्ठानम् । तदुभयमपि सम्भवति केषांचिदगण्यैः पुण्यैः, न खलु समस्तानाम् । तेषां च साध्वसाधुप्रस्थितानां प्रसादो दण्डनं च सति राज्य एव संघटेत । परथा कथं वा दण्ड्यान् दण्डयेत्, साधून् वा सन्तोषयेत्; विशेषतः शिवपूजनोपकरणानि कथं नाम सम्भवेयुः, कथं रत्नमया आलयास्तन्मयानि[1] गोपुराणि च विधातव्यानि, कथं वा कारयितव्या रथादिकमहोत्सवाः, कथं वा कल्पनीया महाभिषेकसामग्री, कथं सम्पादनीया रत्नदीपपरम्परा शिवालयेषु, कथमन्नानि षड्रसोपेतानि निवेद्यन्ते, कथं तौर्यत्रिकमारचितव्यम्, कथं वा पोषणीयाः शिवभक्ताः? अतः सर्वथाऽपरिहरणीयं राज्यम् ॥

किं नागतः कर्णपथं नृपेन्द्रः
श्रीचन्द्रमौलिः प्रथितो हि नाम्ना ।
शैवाग्रगण्यः पुरुहूतमुख्यै-
र्देवैरपि श्लाघितवैभवोऽभूत् ॥ १८ ॥

पृथ्वी कामदुघा सदा फलभरैर्नम्राः परं शाखिनः
पर्जन्यः सुखदां सुवृष्टिमकरोत् क्ष्मामण्डलाखण्डले ।

---

1. रत्नमयानि ।

यस्मिन् शासति शम्भुपूजनरते लोकाश्च नित्योत्सवाः
सौजन्यैकनिकेतना गतभियश्चासन् चिरञ्जीविनः ॥ १९ ॥

अपि च—

यस्मिन् प्रशासति महीं नृपनायकेन्द्रे
व्याघ्रादयोऽपि शिवपूजनमाचरन्तः ।
हिंसां स्वजातिसहजामपि तां निरस्य
दान्ताः प्रशान्तमनसो ह्यभवन् वनेषु ॥ २० ॥

यस्यासन् बहवो दाराः पुत्राः शूरा महौजसः ।
तेषां तेषां च सौन्दर्यं वर्णितुं केन शक्यते ॥ २१ ॥

स्वैः पुत्रैर्धीरधीरैर्हरिविधिभवने प्राप्य पूजां विशेषात्
संप्राप्यानन्दपूर्णैः पुनरपि सदनं प्राप्तवद्भिः समेतः ।
प्रत्यक्षं दृष्टवद्भिः सदसि मुनिवरैर्वर्ण्यमानं समन्ताद्
आकर्ण्याकर्ण्य हृष्टः प्रतिदिनमपि यस्तत्र तैर्यत्कृतं तत् ॥२२॥

प्राप्य श्रीचन्द्रमौलिर्नरपतितिलकः पुत्रपौत्राभिवृद्धिं
कृत्वा राज्यं च भुक्त्वा श्रुतिविहितसुखं तोषवान् रोगहीनः ।
शैवान् धर्मान् प्रवर्त्य प्रथितबहुयशाः पुत्रसंक्रामितश्री-
र्धर्मात्मा वन्दनीयः परतरशिवसायुज्यमापान्तकाले ॥ २३ ॥

सतां सन्तोषजननं शिवपूजेति तत्सुताः ।
राज्यं चक्रुस्तथा चान्ये तेषां सन्तुष्टये नृपाः ॥ २४ ॥

तस्माद्भवता भवद्वंश्यैश्च तदङ्गीकृत्य राज्यम्, सन्ति महान्ति शिवक्षेत्राणि, तेषु च जीर्णा आलया नवीकर्तव्याः, महोत्सवाश्च प्रवर्तनीयाः, तत्र च चतुर्थावतरता सकलशिल्पागम-

पारदृश्वना विश्वकर्मणा सह धनपतिः सहायो भविष्यति । वत्स! मा भैषीः, पश्य मदीयं रूपम्" इत्यभिधाय, विधाय विप्रवराकृतिमन्तर्धानगतां, प्रदर्श्य तस्मै सपत्नीकाय अवाङ्मनोगोचरं वतंसीकृतचन्द्रलेखं त्रिलोचनम् अम्बिकाश्लिष्टवामभागं कपर्दबन्धविराजमानगङ्गातरङ्गं, वरदाभयहस्तमेकेन करेण विधृतखट्वाङ्गम् अपरेण चाङ्गीकृतबालकुरङ्गं, करुणामृतशीतलया दृष्ट्या कुर्वत्संरक्षणम् अत्यद्भुतं रूपम्, तं सपत्नीकमनुगृह्य तद्रूपमन्तर्धानं प्रापयामास भगवाननिर्वचनीयमहिमा श्रीशिवः पावननामा ॥

अथ सपत्नीकस्य कुलोत्तुङ्गस्य "अहो वात्सल्यं शिवस्य" इति चिन्तयतस्तदाज्ञां बिभ्राणस्य शिरसा स्वगृहमधिवसतो यथोचितमाचरतस्तस्य कतिचिद्दिनानि व्यतीयुः ॥

अथ च क्रमेण निखिलभुवनसन्तापहरणसुकृतसम्बन्धादिव श्वेतायमानासु मेघावलीषु, दिशि दिशि विसृत्वरेण अमुष्य यशःसमुदायेन धवलीकृत इव निर्मलतरगगनान्तरे, चतुरतरदूतिकावचनप्रसादितासु मानिनीष्विव कालुष्यमपहाय प्रसन्नासु शरन्नदीषु, पम्फुल्यमानशरकुसुमधवलतालक्ष्मीं विजेतुमिव समागत्य तत्र तत्र नदीपुलिने विहारमाचरत्सु राजहंसेषु—

नेत्रानन्दविधायिकान्तिलहरीं सुत्रामसम्मानितं
गोत्राधृग्वरकन्यकापतिदयापात्रं धनाधीश्वरः ।
तत्रागत्य वचोऽब्रवीन्मधुरवाग्वित्रासहीनं तदा
भूत्राणाय कृतोद्यमं सविलसद्वक्त्राब्जमीशाज्ञया ॥ २५ ॥

"अये महाभाग कुलोत्तुङ्ग! श्रूयताम्—

अस्ति स्वास्तिकरं शमीवनमिति प्रख्यातमेकं स्थलं
यस्मिन् तञ्जपुरीश्वरः स भगवानानन्दवल्ल्या सह ।
सान्निध्यं कुरुते सुरासुरगुरुः पूर्णो जगद्रक्षको
लिङ्गाकारधरः परः शिवतरः शक्त्याम्बया पूर्णया ॥ २६ ॥

पुरा सुरवरार्दिता अदितिसूनवो यत्र तं
समर्च्य विविधैः स्तवैः स्मरहरं प्रसाद्येश्वरम् ।
तदीयवरदानतो रिपुकुलानि जिग्यू रणे
तदा प्रभृति विश्रुतः स विजयेशनाम्ना शिवः ॥ २७ ॥

अनन्तरं च—

तञ्जासुरः कश्चन दैत्यनाथः पितामहाल्लब्धवरो बभूव ।
गर्वोन्नतः पर्वतराजदेहश्चरन् जनानां भयमादधानः २८ ॥

यन्नासीरमुखे चरद्भटगणैराताड्यमानानक-
प्रौढोद्यच्छ्रुतिभीषणं हि निनदं श्रोतुं नभःसर्पिणम् ।
शक्राद्या अमरा दिशां च पतयो नालं समर्थाः कथं
योद्धुं तेन महाहवे शरमुचा सज्जं धनुर्बिभ्रता ॥ २९ ॥

यस्यासन् परिचारका दिविषदो दास्यश्च तेषां स्त्रियो
यद्गोष्ठे सुरधेनवो दुदुहिरे कामं सुराणां द्रुमाः ।
यस्योद्यानवनाश्रिताः सुमफलैरानन्दयन्तः सदा
तादृग् दैत्यवराग्रणीः स तु कथं शक्यो मया वर्णितुम् ॥ ३० ॥

तादृक् तञ्जासुरोऽसौ प्रभुतिलकमणिः स्वैस्समेतस्तु सैन्यैः
यत्रागत्य प्रतापाक्रमितसुरगणः पीडयामास लोकान् ।

ते सर्वे शम्भुमीशं परशिवममलं नाथमाराधयन्तः
श्रीमन्तं सर्वपीडापरिहरणपटुं प्रार्थयामासुरित्थम् ॥ ३१ ॥

"क्षेत्रज्ञोऽसि महानुभाव भगवन् क्षेत्रस्य नाथोऽसि यद्
दीक्षां सन्दधता जगद्विशसने शिक्ष्यामहे सर्वथा ।
अध्यक्षेण सुरारिणा दनुभुवां दक्षेण तञ्जेन भोः[1]
त्वत्क्षेत्रे निवसाम शङ्कर वयं रक्षाधुनास्मान् प्रति ॥ ३२ ॥

यं जातुचिद्व्रजति चेदधमोऽपि जन्तुः
सञ्जायते न जननीजठरे कदापि ।
कञ्जाक्षपूजितपदद्वय तादृशस्त्वं
तञ्जासुरं जहि शिव प्रणतार्तिहारिन् ॥ ३३ ॥"

अथैवं प्रार्थितः शमीवने वसमानैः[2] ब्रह्मणा ब्राह्मणैर्ब्रह्मघोषमुखरितैः पराशरप्रभृतिभिः दुरासदस्य शरासनधारिणो दुरात्मनस्तस्य निधनाय कृतनिश्चयः भक्तजनचिन्तितपूरणचिन्तामणिः प्रभुग्रामणीः कञ्जभवकञ्जविलोचनादि[3]सुरवरपुञ्जमकुटमणिरञ्जितपदकमलः तञ्जपुरीश्वरः मञ्जुलमृदुलहासां स्वाभिन्नां शक्तिमानन्दवल्ल्यभिधानं दधानां परशिवामिदमाह परशिवः—

"जहि तञ्जासुरं दुष्टं पाहि लोकान् महेश्वरि ।
संरक्षितुं जगत्का वा त्वदन्या परदेवते ॥ ३४ ॥"

इत्याज्ञया परशिवस्य करुणामृतवारिधेर्भगवत्या भवान्या आनन्दवल्ल्या अष्टभिः प्रकाशिताभिः शक्तिभिः अष्टासु

1. दनुभुवामध्यक्षेण सुरारिणा दक्षेण तञ्जेन जगद्विशसने दीक्षां सन्दधता सर्वथा शिक्ष्यामहे दण्ड्यामहे ।

2. ईदृगवैधमात्मनपदं कविनात्र बहुत्र प्रयुक्तम् ।

3. ब्रह्म-विष्ण्वादि - ।

दिशासु निरोधं प्रापितेन युध्यमानेन, प्रक्षीयमाणेषु सैन्येषु, शिक्ष्यमाणेषु सेनानायकेषु, दिवं प्रयातेषु प्रधानेषु, निकृत्ते च पार्ष्णिग्रहे, वध्यमाने चक्ररक्षके, विकलीकृते स्यन्दने, शकलीकृते च ध्वजे, निपातिते सारथौ, छिद्यमाने वर्मणि,[1] भिद्यमाने चर्मणि,[2] द्विगुणितरोषप्रकारेण, विकोशं प्रगृह्य खड्गं 'क सा देवता' इति प्रधावता इतस्ततः संनिधिमेत्य तस्याः, तामेव परदेवतां निरीक्ष्य, तदीयकृपाकटाक्षावलोकनेनैव विगलितमनोमलेन विसृज्य समरसंरम्भम्, अन्तःकरणमभिव्याप्य बहिर्निर्गच्छता सत्त्वांकुरेणेव रोमाञ्चप्रपञ्चेन पाद्यमुपकल्पयितुं सम्भृतेनेव शुचिना आनन्दजलेन, मनोवाचामगोचरां स्तोतुं लज्जयेव मन्दमन्दं प्रवर्तमानया गद्गदस्वरया वाचा च प्रकाशित-भक्तिभरेण तज्ञासुरेण प्रणम्य साष्टाङ्गं सकलजगदानन्दकन्दल्याः तस्याः परशिवायाः स्तुतिश्चक्रे ॥

"जय जय जगज्जननि ! विश्वविश्वार्तिसंहारदक्षे यक्षराजार्चिते पक्षिवाहादिदेवैस्सदा पूजिते रक्षिताशेषलोके शिक्षितानेकदैत्ये समुद्यज्जपापुष्पसाहस्रकान्तिप्रवाहैकधिक्कारिदेहप्रभे सुप्रभे !

सुधासिन्धुमध्यस्थचिन्तामणिद्वीपसौधस्थनीपालिपुष्पास्तृतोद्यत्प्रभाजालसंशोभिमञ्चस्थकामेश्वरांकस्थिते व्याप्य सर्वं स्थिते !

देवि ! हस्तोल्लसद्दीप्यमानप्रवालैकदण्डोच्चलच्चामराभ्यां श्रिया चापि देव्या गिरां पार्श्वभागेषु संवीजिते सर्वैश्च सम्पूजिते !

1. कवचे ।
2. खेटे ।

सुधापूर्णकुम्भं सुवर्णं दधाना च वामे करे दक्षिणेना-
परेणापि दर्वीं मणीनिर्मितां सर्वलोकाय दिव्यां सुधां त्वं दिशन्ती महादेवि संरक्षसे, योगिभिर्ध्यायसे श्रेयसे, कथंकारमम्बां परां देवतां स्तौमि विश्वेशि मातस्स्तुतिव्याजतो मे कृतान् त्वं क्षमस्वापराधान् समस्तान् शिवे ते नमस्ते नमः ॥

देवि त्वत्पदपङ्कजं श्रुतिशिरःसीमन्तभूषायते
भक्तानां समभीष्टपूरणविधौ तत्कल्पवृक्षायते ।
यद्धूलीलवलेशकोऽपि जगतां सृष्ट्यादिकर्तॄनुमे
त्रीन्देवान्विदधाति हन्त्यवति तल्लीला किमन्यच्छिवे॥३५॥

अपि च—

यन्निर्माति च लीलया कमलभूः यद्विष्णुना रक्ष्यते
यच्चापि ह्रियते हरेण गिरिजे मातः शिवे शङ्करि ।
तत्सर्वं तव पादपङ्कजरजोलेशस्य लेशायते
तादृक् त्वच्चरणं कथं नु विषयस्स्तोतुं भवेन्मादृशः ॥ ३६ ॥

चन्द्रे कान्तिरसि त्वमेव मिहिरे त्वं तिग्मता दाहिका
वह्नौ शीतलता जले सहनता भूमौ महत्तांबरे ।
वायौ त्वं च जनात्मिकासि गिरिजे यद् दृश्यते श्रूयते
सर्वं व्याप्य शिवे स्थिता विजयसे मातर्नमस्ते नमः ॥३७॥"

इति स्तुता तदा तेन प्रसन्ना च विशेषतः ।
"वरान् वृणु शुभान् दैत्ये"त्यब्रवीत्परदेवता ॥ ३८ ॥

देव्यास्तद्वचनं श्रुत्वा तज्ञो दैत्यवराग्रणीः ।
आनन्दवल्लीं देवेशीमब्रवीज्जगदम्बिकाम् ॥ ३९ ॥

"अयि भगवति परमेश्वरि भक्तवत्सले! किमस्मात्परमस्ति ।

तत्ते देवि पदद्वयं परशिवे दृष्टं मया श्रीकरं
यन्माहात्म्यमपारकीर्तिविभवं यद्दर्शनं कर्मणाम् ।
आतिथ्यादिकधर्मकोटिनिवहस्यौपासनायाश्च यद्
वेदान्तश्रवणस्य देशिकपदद्वंद्वार्चनायाः फलम् ॥ ४० ॥

अहो भगवत्या अम्बायाः सदयत्वम् !

येनोत्पत्तिप्रभृति विहितं दुष्टकर्मैव नित्यं
येनाम्बायाः स्थलमिदमहो क्लेशितं पापबुद्ध्या ।
दत्ता भीतिः सुरवरगणे द्रोहिणा येन दुष्टे
तञ्जे तस्मिन्नपि परशिवा यद्विधत्तेऽनुकम्पाम् ॥ ४१ ॥

देवि! करुणार्णवे! तवाज्ञया प्रार्थयामि—

प्रसीद विश्वेश्वरि विश्वमातः
मन्नामतः ख्यातमिदं स्थलं च ।
सायुज्यमुक्तिर्मम चास्त्वमुष्मिन्
सतां प्रसन्ना वरदा भव त्वम् ॥ ४२ ॥"

इति तत्प्रार्थितं सर्वं ददौ सा परेदवता ।
आनन्दवल्ली वरदा करुणामृतवारिधिः ॥ ४३ ॥

अथ तञ्जासुरोऽपि पुनरावृत्तिवर्जितां शिवसायुज्यमुक्तिं प्राप्तवान् ।

तदाप्रभृति तञ्जेशनाम्ना ख्यातः परः शिवः ।
स्थलं तञ्जपुरीत्याख्याप्रख्यातिं शुभदां दधौ ॥ ४४ ॥

यत्रस्थाः सुखिनोऽभवन्मुनिवराः सर्वे जनास्सर्वदा
तञ्जाख्ये निहते दुरात्मनि तदा चानन्दवल्ल्या तया ।

देवेन्द्रः सकलैस्सुरैरपि दिशां नाथैः समं पूजयन्
शक्तिं तां परदेवतां परशिवं चाप स्वराज्यं पुनः ॥ ४५ ॥

शक्तयोऽष्टौ महेशान्याः सुप्रसन्ना वरप्रदाः ।
सान्निध्यं कुर्वते यत्र रक्षितुं सकलं जगत् ॥ ४६ ॥

अहमपि यत्र पशुपाशविमोचकं शिवमाराध्य तल्लेश्वरं पुष्पकनामविमानरत्नं धनाधिपत्यं च प्राप्तवानस्मि । उषितपूर्वत्वान्मया स्थलस्य यस्य दक्षिणालकेति नामधेयं प्रख्यातं बभूव ।

तस्मिन् क्षेत्रवरे शुभा विरचिता सच्छिल्पिना शाश्वतो
देवानां परिखायुता दृढतरप्राकारयुक् पावनी ।
पूर्णा सर्वसमृद्धिभिश्च नगरी तल्लेश्वरस्याज्ञया
तत्र त्वामभिषेचयाम्यहमये श्रीमंस्त्वमेहि द्रुतम् ॥ ४७ ॥

द्रव्यं च ते बहु ददामि शिवाज्ञयाहं
त्वद्वंशजाय सकलाय कृतावतारः ।
जीर्णालयोद्धरणकर्मणि विश्वकर्मा
साहाय्यमाचरितुमस्ति स तत्र शिल्पी ॥ ४८ ॥"

इति वात्सल्यतो लाल्यमानः परिपाल्यमानः तदीयगिरमाकर्ण्य कुलोत्तुङ्गोऽपि प्रत्यभाणीत्—"अये परमेश्वरमित्र! शिवाज्ञया यत्र नेतुमिच्छसि तत्र नेष्यामहे; यदनुभावयितुमिच्छसि तदनुभविष्यामहे; यच्च वा कारयिष्यसि तत्करिष्यामहे; सर्वथा परवन्तो वयं परशिवेन" इति । अथ तद्वचसा तुष्टमनाः धनाधिपः गजदन्तमयीं शिबिकामारोप्य तं सपत्नीकं, प्रदाय च तत्सुहृद्वर्गाय वाहनरत्नानि, तैश्च साकं पूर्वमेव भृत्या[1]संपादितेन अश्वरथगजपादातिबहुलेन

1. वेतन-

सन्नद्धेन पुरतस्ताड्यमानानेकपटहादिमङ्गलकरविविधवाद्यगम्भीरतरनिध्वानकोलाहलेन बधिरितदिङ्मुखेन सैन्येन निर्गत्य तद्ग्रामतः प्राक्प्रसाधितां विश्वकर्मणा समानीय तञ्जनगरीं, श्लाघमानतदागमनमहोत्सवैः तन्निवासिभिश्चतुर्भिर्वर्णैश्च प्रत्युद्गम्यमानं पदे पदे धर्माधिकारसभायामुपकल्पितं हंसतूलकल्पितमृदुलास्तरणं सुवर्णमयं भद्रपीठमध्यारोप्य, स्वीयैरनुचरैः चतुर्णवीसमाहृतं जलमादाय दक्षिणावर्तेन शरन्निशाकरमण्डलशङ्कां वहता शंखेन, प्रणम्य सम्मानितानां पराशरप्रभृतीनामनुमत्या शुभे मुहूर्ते मकुटाद्यलङ्कृतस्य पत्नीसहितस्य कुलोत्तुङ्गस्य तस्याभिषेकमकरोद्धनाधिनाथः ॥

अभिषिक्ते कुलोत्तुङ्गे सन्तुष्टाः साधवोऽभवन् ।
फलैः पुष्पैर्युता वृक्षा नम्रा रिपुकुलैस्सह ॥ ४९ ॥

तस्य चेतःकोमलतां नन्तुं प्राप्तेव नन्दनात् ।
वृष्टिव्याजात्पुष्पपंक्तिः ददृशे तत्र संसदि ॥ ५० ॥

दिव्या दुन्दुभयो विनेदुरखिलाः स्ववारवामभ्रुवो
नृत्यं चक्रुरतीव तुष्टमनसस्तस्याभिषेकोत्सवे ।
गन्धर्वाश्च जगुः कलं सुरभयो वाता ववुः शीतलाः
संप्रापुश्च दिशः प्रसादमभवत्सर्वं शुभद्योतकम् ॥ ५१ ॥

कुलोत्तुङ्गपट्टाभिषेके तदानीं
सुवर्णं च वासांसि रत्नानि तेभ्यः ।
तथोच्चैर्ददौ ब्राह्मणेभ्यो धनेशो
यथा ते द्विजाः साम्यमापुः स्वकीयम्[1] ॥ ५२ ॥

---

1. धनदसाम्यम् ।

एवं विधाय तदभिषेकमहोत्सवम्, 'अये महाभाग! भवतो भवद्वंशजानां च द्रव्याभिवृद्धिर्निरवधिका भविता; अयं च कृतावतारो विश्वकर्मा शिल्पिराजो जीर्णोद्धारकर्मणि भवता भवदीयैश्च नियोजयितव्यः; असावपि देवदत्तो नाम ब्राह्मणः बृहस्पतिना शुक्रेण च समानधिषणो नयवैभवः स्वायत्तसिद्धिनापि देवेन विश्वविश्वम्भराभारवहनकर्मणि साचिव्यपदेन पुरस्कार्यः; न विस्मर कदापि भगवतो मृत्युञ्जयस्य परशिवस्याज्ञाम्; अनया च चतुरङ्गिकया सेनया चतुरोऽपि वर्णानिमां च नगरीं पुत्रवत्पालय" इति च तमाभाष्य समालिङ्ग्य प्रीतिपूर्वकं कथंचित्तेन विसृष्टः कुबेरः प्रणम्य सम्पूज्य संस्तुत्य सम्प्रार्थ्य परशिवौ स्वकीयं भवनं संप्राप यक्षराजः। अथ कुलोत्तुङ्गोऽपि यथा समादिष्टं परशिवेन, यथा चोक्तं तदीयमित्रेण, तत्तथैवायमकरोत् ॥

चार्वाकेन समं कलिः स्वचरितैः द्वीपान्तरं प्राप्तवान्
तस्मिन्शासति भीतितः परिहरन् क्षोणीं समुद्राङ्किताम्।
तत्प्रीत्या पुनरागतं कृतयुगेनेव प्रसन्नात्मना
वृष्टिश्चापि बभूव सर्वसुखदा भूमिः ससस्या सदा ॥ ५३ ॥

धर्मश्चतुर्भिश्चरणैस्समेतो यज्ञैस्सुराः प्रापुरतीव तृप्तिम्।
आसीन्न मूर्खो न च कोऽपि निःस्वः सर्वे धनाढ्याः कृतिनश्च हृष्टाः ॥

तादृक् चोलनृपे महीमवति च स्फूर्जत्प्रतापानल-
ज्वालाजालविभीषितारिनिचये शिष्टैकरक्षापरे।
तत्कीर्त्या हरिदङ्गनाजनमुखाम्भोजेषु हासायितं
स्वर्गस्त्रीकुचमण्डलेषु सुमनोहारायितं शुद्धया ॥ ५५ ॥

शुण्डादण्डविराजमानसुमहाकण्डूलहस्तोल्लस-
तीक्ष्णोद्दामकरालखड्गलतिकामित्रे(ण) पृथ्वीभुजा ।
सङ्ग्रामाङ्गणभूमिषु प्रचरता राज्ञा तथा क्रीडितं
मध्ये चाप्सरसामलब्धपतिका नैकापि जाता यथा ॥ ५६ ॥

अङ्ग त्वं गतजीवितोऽसि समराद्वङ्गाद्य किं धावसे
पाञ्चाल प्रपलायसे कथमहो नेपाल तिष्ठाधुना ।
काश्मीरापसरेति यद्भटगणाश्चैरुर्ब्रुवन्तो रणे
तादृक् चोलनृपप्रतापमहिमा धर्मैकसारोदयः ॥ ५७ ॥

तत्र तत्र शिवक्षेत्रे जीर्णोद्धाराः कृता बहु ।
विश्वकर्मसहायेन कुलोत्तुङ्गेन धीमता ॥ ५८ ॥

प्रवर्तिता महोत्सवा रथादिका अनेकशः
कृतं च कारितं विभोः शिवस्य साम्बिकस्य च ।
(प्र)पूजनं स्वनुष्ठिता व्रतावली महात्मना
विशेषतस्तु पोषिताः प्रतोषिताश्च शाङ्कराः ॥ ५९ ॥

एवं धर्मैकनिरतस्य नर्मालापसुहृदा कोमलाङ्ग्या सह शर्माभिवृद्धिं प्राप्तवतः प्रजापालनशीलस्य तस्य कुलोत्तुङ्गस्य कतिचिदतिचक्रमुर्दिवसाः । अथ कदाचिदितस्ततः सञ्चारमारचय्य निवर्तमानैः स्वसदनाय मदकलमालपद्भिः पारावतैरुपगीयमानासु वलभीषु, प्रजापालनजाकरूकतां दृष्ट्वैव तस्य स्तुवत्स्विव निजनीडनिलीयमानपतत्रिकोलाहलेन उद्यानमाश्रितेषु तरुवरेषु, सहस्रैरपि करैः समालिङ्गनपरवशतया समुत्सृज्य तीक्ष्णतामङ्गीकृतमार्दवे रक्ततरे पश्चिमाशावधूविलाससदनं भजति दिवाकर-

बिम्बे, वनिताजनवदनलावण्यविनिर्जितेष्विव सङ्कोचमाव्रजत्सु गृह-कमलिनीकमलेषु, अतिदुःसहविरहकृशानुदूयमानहृदयचक्रवाका-ङ्गनासमाश्वासनपरेष्विव कांस्यकेङ्कारानुकारिषु रटत्सु गृहवापिका-राजहंसेषु, सन्तुष्यमाणहृदयविलासवतीमुखजलजेष्विव विकासं भजत्सु कुमुदेषु, तरुणीजनकटाक्षशोभासाम्यमस्तीति द्योतयितुमिव प्रफुल्लेषु गृहदीर्घिकानीलोत्पलेषु, रत्नदीपप्रभाप्रसारतिरस्कृतान्धकारेषु सदनेषु, धूपामोदसम्मोदितासु दशदिशासु, कुत्रचित्सञ्चार्यमाणासु चतुरतरदूतिकाचाटुवचनचातुरीषु, क्वचिदभिसरन्तीषु अभिसारि-कासु, कस्मिंश्चिद् (कुतश्चिद्) अपनीयमानमानिनीमानेषु तरुणेषु, एकतश्च पटुतरविटनिकरेण सम्प्रसाद्यमानासु शम्भलीषु, कुतश्चिदा-लिख्यमानपत्ररचनासु तरुणीषु, समुदिष्यमाणस्य पीयूषमहसो निरर्गलमूर्ध्वमुखसंसर्पिकिरणकलिकाकणेषु ततस्ततः प्रसृत्य नभसि लग्नेष्विव द्योतमानेषु नक्षत्रेषु, तदीयकान्तिधाराभिरेव प्रशान्ते च सन्तमसे, अनुल्लङ्घनीयशासनशम्बरशासननिरर्गलनिर्गलदुज्ज्वल-शरनिकरैः प्रखण्डिते मानिनीमाने, विनाशयन् तिमिरकुलम्, उज्ज्वलयन् दिशावदनानि, द्विगुणयन् पराक्रमं कुसुमधन्वनः, प्रसारयन् ज्योत्स्नाजालम्, प्रसाधयन्नम्बरतलम्, प्रसादयन् मनांसि विलासिनाम्, सञ्जीवयन् शृङ्गारम्, प्रीणयन् चकोरान्, निर्झरयन् चन्द्रकान्तोपलानि, पोषयन्नोषधिजालानि, तोषयन्कुमु-दिन्याः(........);[1] भगवानमृतदीधितिरुदजृम्भत ॥

अथ तदानीमेव उत्थाय धर्मासनात्, प्रविश्य भोजनगृहं, विरचितभोजनविधिः, गृहीतताम्बूलः, आमूलाग्रसुधाधवलिततया

1. अत्र कोशे लोपः ।

सुरासुरनिर्मथ्यमानक्षीरोदधिसमुद्भूतफेनपुञ्जमिवैकतः कृतम्, अत्युन्नततया शरदभ्रपटलविजिगीषया अतिक्रामन्तमिव गगनमण्डलम्, दिशि दिशि विद्योतमानैः नवरत्नप्रभाझरीवाहिभिः सौवर्णैः कलशैः उपरि विभूषितान्तरालम्, तत्र तत्र विराजमानरत्नदीपप्रभापरम्पराभिः कबलितान्धकारम्, एकतश्च समुदञ्चितविपञ्चीरवम्, एकतश्च गम्भीरतरवाद्यमानमृदङ्गम्, एकतश्च मुखरितमुरजम्, एकतश्च श्रूयमाणवेणुनादम्, क्वचिदारभ्यमाणनृत्तप्रसङ्गम्, क्वचिदुद्गीयमानसङ्गीतम्, क्वचिदभिनीयमानभावम्, क्वचित् संस्तूयमानमनोभवपराक्रमम्, क्वचित्प्रशस्यमानचन्द्रकिरणम्, क्वचित् सम्पूज्यमानमन्दानिलचरितम्, क्वचित्प्रवर्त्यमानकाव्यविनोदप्रकारम्, तदुचितपरिचारिकाभिः मणिदीपिकाहस्ताभिः निर्दिश्यमानवर्त्मा, प्रविश्यान्तःपुरसौधम्, "किं चापल्यमुपैषि चाम्पेयकलिके! विपञ्चीमालिंगमाना च कं सञ्चिन्तयसे? किं मधुराधरे! मधुरसलुब्धा त्वं विधुरितहृदयेव विधुं न सम्मानयसि? किं कदम्बवल्लरि! नितम्बभरेणेव विलम्बसे शम्बरानयने[1]? किं कुन्दरदने! सुन्दरिके चन्दनाहरणे मन्दयसि? किं भ्रमरिके! भ्रमसि वृथा भ्रान्तवदने भ्रमरान्न निवारयसि निपततोऽपि? विदग्धवचने! मुग्धवनितेव स्निग्धतरापि मयि दुग्धप्रदानं कथं विस्मरसि? मदनिके! मदनवशेन मदवनविषयेऽप्यद्य किं त्वं न दयसे? प्रवालमञ्जरि! विशालपात्रेषु रसालरसमापूरय, सुरसालानि दाडिमीबीजानि च; त्वरावातिके! संत्वरस्व संत्वरस्व, चत्वरमागतो देव इति विसृत्वरेण जयशब्देन कथं न ज्ञायते? गजराजमंदगतिविराजमानगतिविलासे राजानमिमं सम्भावय राजवनिते! प्रत्युद्गमनेन"

1. जलाहरणे।

इति शृण्वन् वचनानि मदकलमालपन्तीनां मणिमयपञ्जरविहारिणीनां शुकशारिकाणाम्, द्वारपालिकाभिः प्रणम्यमानः, प्रत्युद्गम्य प्रियया जयशब्दपूर्वकं दत्तहस्तावलम्बः, चन्द्रशालामासाद्य सुखोपधानं स्वास्तीर्णमृदुलशयनं तया साकं मञ्चमध्यास्य तरुणतरुणतरकिरणपरम्पराभिः कतकरेणुभिरिव निर्मलयन्तं जगदर्णवम्, गगनसरसि विलासमातन्वानमिव राजहंसम्, रौप्यमयपानपात्रमिव गगनवनितायाः सुधांशुमवलोक्य कुलोत्तुङ्गः अनङ्गराज्याधिदेवतामिव मूर्तिमयीं तां समवादीत् ।

"प्रिये कोमलाङ्गि! पश्य—

अष्टाकृतेर्जयति मूर्तिरयं सुधांशुः
 काष्ठाः प्रसादमुपयान्ति करैर्हि यस्य ।
वृष्टिं सुधारसमयीं विदधत्प्रजानां
 तुष्टिं करोति मदनप्रियजीवितं सः ॥ ६० ॥

चान्द्रास्ते किरणा जयन्ति परितः सान्द्राश्चकोरक्षुधा-
 मुद्रामोचनकारिणश्च तमसां विद्रावका निर्मलाः ।
ये च द्रागभिघट्टिताः शशिमणीन् सन्द्रावयन्त्युद्भटो-
 पेन्द्रापत्य[1]पराक्रमैकनिधयो भद्राणि संतन्वते ॥ ६१ ॥

चक्राकारभृतस्त्वमुष्य शशिनो यत्काष्ठसंयोजना-
 यैव च्छिद्रमकारि भूरियशसः शम्भोः पुरां भेदने[2] ।

---

1. उपेन्द्रापत्यं मन्मथः ।

2. त्रिपुरसंहारसमये मेरौ रथीकृते चक्रीकृतयोश्च सूर्याचन्द्रमसोः चक्रयोजनार्थं मध्ये छिद्रनिर्माणस्यावश्यकत्वाद् एवं उत्प्रेक्षा ।

तद्द्वारा स्फुरतीन्द्रनीलसदृशं व्योमैव नान्यन्मुधा
भ्रान्त्यायं जगतीतले शश इति ख्यातः प्रवादश्चिरम् ॥ ६२ ॥

यन्माद्यन्ति चकोरकाश्च कुमुदान्याह्लादमातन्वते
दृप्यच्छम्बरवैरिबाणनिकराः पुष्णन्ति यत्तीक्ष्णताम् ।
यत्स्वच्छाः प्रदिशो दिशश्च नभसा साकं विराजन्त्यमूः
तत्सर्वं जयति प्रसादमहिमा पीयूषभानोरयम् ॥ ६३ ॥"

इति ॥

कृततदुचितकार्यो राजचूडामणिः श्री-
परशिवपदपद्मं संस्मरन् चोलनाथः ।
अनयदथ निशां तामेष वीराग्रगण्यो
मृदुलशयनमध्ये हेममञ्चे महात्मा ॥ ६४ ॥

अथ च स्थूलतमवर्तुलमुक्ताफलकान्तिविनिर्जितेष्विव मनोभवसङ्गरपरिमृदितमृदुलशयनीयास्तृतमल्लिकाकुसुमेष्विव ग्लानिं भजत्सु नक्षत्रेषु, विलासभवनादुत्प्रेक्ष्य नायकानिर्गमनं चिन्तानिश्वसितकलुषितेषु तरुणीवदनेष्विव दृश्यमानेषु रत्नदीपप्रभाजालेषु, प्रबोधयितुमिव नरपतिं मदकलमालपन्तीषु मणिमयपञ्जरविलासशालिसुप्तोत्थितशुकशारिकासु, सुन्दरतररमणीजनमुखरामणीयकदर्शनतो मन्दं मन्दं लज्जयेव भुवनप्रसृतां संगृह्य रश्मिमालामानन्दयितुमिव दर्शनेन पश्चिमक्षीरोदधिं परित्यज्य गगनमध्यं वरुणदिगङ्गनामुखरोचनातिलकायमाने शशधरबिम्बे, उदयगिरिवरपद्मरागशिलासमुद्यत्प्रभापटल इव पूर्वदिशाधिनाथमत्तवारणमुखचर्चितसिन्दूरसमुदाय इव दिग्वनिताकुचमण्डलविस्तारितकुङ्कुमपत्रसमृद्ध इव प्रसरति गगनतले सन्ध्यारागे,

करैः पटुतरैः तमःपटलपाटने रञ्जयन्
दिशां वदनपङ्कजं गगनमण्डलं द्योतयन् ।
पुरन्दरदिगङ्गनां तिलकयन् विभुर्भास्करः
प्रकाशितजगन्महानुदयमाययौ नन्दयन् ॥ ६५ ॥

दिनकरकिरणस्पर्शनजातात्पुण्यादिवारविन्दानि ।
लब्ध्वा विकासमतुलं सुमुखीवदनोपमानि जातानि ॥ ६६ ॥

मकरन्दपानलुब्धा भ्रमराः पक्षान् वितत्य हिण्डन्तः[1] ।
गुञ्जन्तः प्रतिकमलं प्रबभुः सौखप्रसुप्तिका[2] इव ते ॥ ६७ ॥

सारसरसितव्याजादुद्यन्तं भास्करं द्रुतमवेक्ष्य ।
संस्तुतिमिव विदधाना ददृशे नलिनी विकासिमुखकञ्जा ॥ ८६ ॥

रेजुः कुङ्कुमरेणुवद्रविकरा नूत्नप्रवालान्तरे
सिन्दूरद्रववद्विकासिषु जपापुष्पेषु, माणिक्यवत् ।
फुल्लाशोकवनेषु, किंशुकसुमेष्वालक्तवद्, दाडिमी-
पुष्पे विद्रुमवच्च, कोकनदवत्स्त्रीणां च हस्ताम्बुजे ॥ ६९ ॥

चक्राङ्गनास्तोषमवापुरुच्चैर्वियोगजन्यं व्यसनं विहाय ।
फुल्लारविन्दे लुलिताश्च वाता ववुर्मरन्दस्य कणान्वहन्तः ॥७०॥

ततः समुत्थाय शयनीयात् शिवस्मरणपूर्वकमालोक्य मङ्गल्यानि दर्पणादीनि, निर्वर्त्य व्यायामविधिम्, आसाद्य स्नानसदनं विरचितस्नानादिकृत्यः, प्रविश्य पूजागृहं स्वहस्तापचितैः कोमलैर्बिल्वपत्रैः यथाविभवसम्पादितैः षोडशभिरुपचारैश्च सम्पूज्य शिवम्, प्रदाय दानानि भूरीणि,

1. परस्मैपदं चिन्त्यम् ।
2. अपि ते सुखा निशि सुप्तिरभूदिति प्रातः पृच्छन्तः ।

आप्ततमैस्सह कृतभोजनस्स नरनाथः कुलोत्तुङ्गः प्रविश्य धर्माधिकारमण्डपम्, तत्तदाधिकारिकपुरुषैः पृथङ्नियोजितैः चारैश्च सह देवदत्तेन सचिवरत्नेन निवेदितसकललोकवृत्तान्तः, विचार्य तथा निग्रहानुग्रहौ प्रयुञ्जानः, प्रजासु आगोपालमा सचिवमपि गृहीताभिप्रायः, क्षणं तत्र स्थित्वा, ततो निर्गत्य विलाससदनमा(सा)द्य, मल्लमागधनर्तकविदूषकादिकलाकौशल-मवलोकमानः, इतिहासपुराणकुशलैः काव्यकलानिपुणैः विद्वन्मणि-मकुटायमानैः कटकाद्यलंकृतैरात्मसमानैः सवयोभिर्विरचयन् विनोदं सुखमन्वभूत् ॥

एवं सुखेन परिपालयतो धरित्रीं
यातेषु केषुचिदहस्सु शिवार्चकस्य ।
चोलेश्वरस्य वनिता सुषुवे कुमारं
लग्ने शुभेऽह्नि शुभसूचकलक्षणाढ्यम् ॥ ७२ ॥

आ सेतोराहिमाद्रेः नरपतितिलकैर्वन्दिताङ्घ्रस्य मूर्ध्ना
तस्य श्रीचोलभर्तुः सुतजननमहानन्दतुष्टान्तरस्य ।
मुच्यन्तां बन्धनस्था इति किल वचनं मोघमासीत्तदेकं
सर्वेषां न्यायमार्गेष्वधिकरसतया बन्धनस्याप्रसक्तेः ॥७२॥

संप्राप्तवत्सु निखिलेष्वधिकं सुवर्णं
चोलेश्वराद् द्विजगणेषु तदातितुष्टात् ।
एको द्विजो[1] न च सुवर्णं[2]मवाप गुञ्जन्
फुल्लारविन्दनिकरे गृहपद्मिनीषु ॥ ७३ ॥

1. भृङ्गरूपः पक्षी ।
2. अत्र श्लेषेण सुवर्णं चम्पकपुष्पम् । तत्र भृङ्गो न यातीति प्रसिद्धिः ।

अभ्यस्यमाना इव तत्र दिव्यास्तदीयगम्भीरनिनादमारात् ।
अनाहता दुन्दुभयो विनेदुः पुत्रोत्सवे चोलनृपस्य तस्य॥७४॥

अस्मान् जेष्यति दानतः शिशुरयं मत्वेति भीता इव
स्वर्गे नन्दनवासिनस्तरुवरा वृष्टिं वितेनुस्सुमैः ।
येषां पूरयता दिशः सुरभिणा गन्धेन ते मेनिरे
स्वर्गोऽयं न तु भूः सुरा वयममी मर्त्या न चेत्थं जनाः॥७५॥

भूष्णोः सत्त्ववदग्रणेः[1] सरजसा गन्तुं न शक्यं मया
सान्निध्ये[2] त्विति मन्यमान इव सन्त्यज्यैव पृथ्वीरजः ।
पुष्पाणां मकरन्दशीकरवहः चेतः समाह्लादयन्
चोलेन्द्रस्य सुतोत्सवे कुतुकवान्मन्दं ववौ मारुतः ॥७६॥

एवमादीनि महापुरुष[क]तासूचकानि शुभनिमित्तानि संवीक्ष्य पुत्रजननसम्पत्त्या सञ्जातमानन्दं द्विगुणयन् स चोलनाथः निर्वर्तितजातकर्मादिककृत्यः, ततो व्यतीतेषु दशदिनेषु, संप्राप्ते चैकादशे दिवसे, प्रवर्तिष्यमाणनामकरणमहोत्सवमवलोकयितुमिव समुदिते भगवति भास्वति, विरचितशिवपूजनादिनित्यक्रियः, मूर्तिमद्भिरिव वेदैश्चतुर्भिर्ब्राह्मणैरलङ्कृतपार्श्वभागेन श्रौतकर्मणि निष्णातेन विदितनिखिलस्मार्तविधिना आदर्शतलदृश्यमान-बिम्बवदवगतसकललोकमर्यादेन निर्मर्यादबुद्धिवैभवेन नरपति-दिदृक्षया भुवमवतीर्णेनेव वेदपुरुषेण यज्ञदत्ताभिधां वहता ब्राह्मणोत्तमेन पुरोधसा सममवरोधगृहं प्रविश्य, तदुक्तेन विधानेन तमात्मजन्मानं देवचोलनामानमकरोत् । तत्र च अवसरे—

---

1. सात्त्विकानामग्रणेः ।
2. सन्निधौ ।

प्रीत्या पराशरमुनिः कृतसन्निधानः
पूजां प्रगृह्य नरनाथसमर्पितां ताम् ।
तुष्टः शिवैकशरणः सकलस्य वेत्ता
दृष्ट्वा शिशुं नृपमवोचदिदं महात्मा ॥ ७७ ॥

"बालो लक्षणवान् समुद्रवसनां संरक्षिता मेदिनीं
जित्वा शत्रुगणान् पराक्रमनिधिः कुर्याद्वशे तान् रणे ।
प्रज्ञायां धिषणेन तुल्यविभवो दाता वशी सत्यवाक्
स्वान् पुत्रानिव पालयिष्यति जनान् धर्मेण तान्योजयेत् ॥७८

अपि च—
श्रीमानद्भुतविक्रमः सुरवरैरुद्गीतकीर्तिर्भवेत्
शैवान् धर्मवरान् शिवैकशरणो बालस्त्वनुष्ठास्यति ।
एतादृङ्नरनाथ चोल भवतो भाग्यप्रभावोऽमुना
यत्त्वं पुत्रवदग्रणीः[1] समभवो धन्योऽसि मान्योऽसि च ॥७९॥"

इति वदन्तं यशोभरितदिगन्तं महान्तं पराशरं तं स नरपतिरिदमवोचत । "भगवन् ! शिवभक्ताग्रेसर ! अत्र खलु स्तुत्यो दिशि दिशि विस्तारितविमलयशसां चिरमनुष्ठिततपसां परशिवचरणसरोजध्यानानन्दसम्भृतमनसामीदृशानां महसां महिमा, यदहं तत्रभवद्भिराश्रिते शमीवनेऽस्मिन् कृतनिवासः सौख्यान्यनुभवामि" (इति) ॥

एवं वदन्तमवनीन्द्रवरं सबालं
प्रीत्यानुगृह्य करुणामृतपूर्ण एषः ।

1. पुत्रवतामग्रणीः ।

प्रापे स्वमाश्रमपदं भगवान्मुनीन्द्रः
राजापि दारसहितोऽतितरां तुतोष ॥ ८० ॥

चोलान्नरेन्द्रतिलकात्परिपूर्णकामा
लब्ध्वा धनानि वसनानि च गाः सवत्साः ।
प्राप्ताः स्वकीयसदनं प्रति ते द्विजाग्र्या
आनन्दमाप भुवनं सकलं तदानीम् ॥ ८१ ॥

दिने दिने वृद्धिमवाप बालः सुधांशुवल्लोकसुखैकदाता ।
अथोचितेऽनेहसि चौलकर्म शुभावहं तस्य पिता चकार ॥ ८२ ॥

शुश्रूषयन् द्विजवरादथ यज्ञदत्ताद्
विद्याप्रतिग्रहमसौ कृतवान् कुमारः ।
प्राज्ञत्वमाप निखिलेऽपि च राजकार्ये
धीमान् शिवैकशरणः करुणार्द्रचित्तः ॥ ८३ ॥

अथैकदा सभायामागत्य योगक्षेमं विचार्य प्रजानां, सुख-विश्रान्तस्य नरनाथस्य पितुश्चरणनलिनदिदृक्षया ससम्भ्रमं समुत्थितनिखिलराजमण्डलमकुटघटितकिसलयातिरस्कारिकरकमलाञ्जलीनालोक्य सप्रत्युपचारमनुगृह्णन्निव तान्, समीपमागम्य, प्रणम्य साष्टाङ्गं ज्ञानवृद्धान् ब्राह्मणान् पितरं मन्त्रिणं च, तदाज्ञया दक्षिणभागे स्थितं सौवर्णमयमासनमधिष्ठितं वसन्तमिव मूर्तिमन्तं कुमारमेनं समुद्वीक्ष्य यथोचितमुपविष्टे च राजमण्डले विदितमहाराजेङ्गितः मन्त्रिप्रवरो देवदत्तो मधुरमिदमवादीत्—

"कुमार विदितवेदितव्यस्य सदाचारनिरतस्यापि हितैषिणा वक्तव्यमेव । लोके खलु आ स्तम्बादा च ब्रह्मणः निखिलानामपि प्राणिनां सकलोपद्रवदायिनी उन्मादकारिणी काचिदस्ति

यौवनं नाम पिशाचिका । ययाऽभिभूता महान्तोऽपि प्राणिनः नष्टबुद्धयः कनिष्ठसेविते मार्गे सञ्चरन्ति । तेन च परिहाय पुत्रादिकान् परित्यज्य सुहृदः परिहृत्य राज्यं विहाय कलत्रं विसृज्य कुलशीलं प्रियानपि प्राणान्परित्यजन्ति । किमुत तदितरे जनाः । श्रूयते हि पुराणेषु यया वशीकृततया पारदारिकतादोषमप्यनवेक्ष्य बृहस्पतिशिष्योऽपि अहल्यां कामयमानः पुरन्दरो बहुव्यसनमाप्तवान् । विराधो नाम गन्धर्वो रम्भापरीरम्भणमीप्समानः राक्षसत्वमागतवान् । विश्वामित्रादयः परमर्षयोऽपि विषयलम्पटाः तपोभङ्गमङ्गीचक्रुः । विबुधा अपि केवलं सुकृतैकलभ्यान् वरानपि दत्वा वानर्यादिष्वधमास्वपि च नारीषु ते रेमिरे । शन्तनुर्नाम पृथिवीपालः गलितेऽपि यौवने विद्यमानेऽपि ज्यायसि गुणोत्तरे गाङ्गेये कुमारे 'त्वद्दौहित्रायैव राज्यं दास्यामि' इति प्रतिश्राव्य दाशात् कन्यां वृतवान्[1]। रावणसुन्दोपसुन्दादयश्च शरीरमेव त्याजिता इति । तां च प्रबलयितुमस्ति काचित् स्वस्तन्त्रता नाम सहकारिणी । एतया च समागमो यदि दैवेन तस्याः संघटेत तदा को नाम तच्चरित्रं वर्णयेत्, कथं वा विषहेत, केन वा ज्ञातव्यम् । एवमुच्चावचानामनर्थपरम्पराणां प्रतिपादयन्त्यौ स्वाधीनयितुमुभे विवेकमन्तरा न कश्चिदपरोऽभ्युपायः । तस्मात्सदैव विवेकशालिना भवितव्यं हितेप्सुना । सम्प्रति विषयोपभोगक्षमं तारुण्यं कुमारमलङ्करोति शनैः शनैः । द्वित्रैरेव दिनैश्चतुरुदधिमेखलाया मेदिन्या आधिपत्यलक्षणा लक्ष्मीश्च कुमारमाश्रयिष्यति । तदत्र दृष्टपरावरेण कुमारेण सावधानेन विवेकः

---

1. अत्र कोशोऽशुद्धः ।

समाश्रयितव्योऽधिकतरम् । एतच्छ्रुत्वा कुमारः प्रमाणम्" इत्यभिदधानं मन्त्रिणं प्रणम्य सविनयं सोऽपि मधुरमिदमवादीत्—

"अये अस्मत्कुलहितकांक्षिन्! जगति को वाऽन्यो वचनानि उत्तरोत्तरश्रेयःप्रतिपादकानि एतादृशानि श्रावयेत्? सर्वथा परित्रातं चोलकुलमिदं यद्भवादृशेन मन्त्रिणा प्रतिपदमेवमनुकम्प्यते । महाराजाज्ञया उपसेवमानस्य चरणकमलं चतुर्दशापि विद्याः प्रतिग्राहयता तत्रभवता यज्ञदत्तोपाध्यायेन कृतो-(त उ)पदेशः सम्प्रति द्विगुणीकृतः । एवमेव तेषु तेषु कार्येषु अनुकम्पयितव्योऽयं जन" इति ॥

अत्रान्तरे च—

उत्तस्थिवान् जितघनस्तनितो मृदङ्ग-
नादो गभीरपणवानकशब्दमिश्रः ।
मध्याह्नसूचनपटुः, श्रवणेन तस्य
राजा ययौ स्वभवनं स च तत्कुमारः ॥ ८४ ॥

अथापरेद्युः प्रभाते विरचितशिवपूजनः स कुलोत्तुङ्गः निखिलनरपतिचक्रचूडामणिमरीचिराजिनीराजितपदकमलः मौहूर्तिकावेदिते शुभलग्ने सहपरिवारः सपौरजनः आनन्दवल्ल्या समेतस्य भगवतः तञ्जपुरीश्वरस्य सन्निधौ सकलशिल्पागमपारदृश्वभिः शिल्पिवर्यैः विरचितमासाद्य विवाहमण्डपं कामिकामिकवंशोत्पन्नस्य शिवपूजाधुरंधरस्य शिवभक्तस्य स्वसमानजातीयस्य शिवसेवकनाम्नः कन्याया अधिराज्ञीपदसूचकलक्षणायाः पाणिं ग्राहयित्वा देवचोलकुमारेण यथोक्तविधानेन, विधाय विवाहमहोत्सवेन साकं स्वतनयस्य देवचोलस्य पट्टाभिषेकमहोत्सवम्,

कारयित्वा विशेषेण पूजाविधिमानन्दवल्लीतञ्जपुरीश्वरयोः पराशरप्रभृतिभिः ब्रह्मर्षिभिः, अनुग्राह्य वधूवरौ, सन्तोष्य द्विजातीनितरानपि, सर्वमपि निवेद्य शिवायेति, उपदिश्य देवचोलं स्वतनयं, सह सकलाभिः प्रजाभिः पुनः प्रविश्य नगरं परिपालितैश्चातुर्वर्ण्यजनैः श्लाघ्यमानान् गुणानाकर्ण्य स्वतनयस्य निरवधिकानन्दभरितहृदन्तरः बहूननीनयदसौ संवत्सरगणान् ॥

अनन्तरं च—

शिवधर्मान् बहून् कृत्वा भुक्त्वा सौख्येन मेदिनीम् ।<br>
कुलोत्तुङ्गः सपत्नीकः शिवसायुज्यमाप सः ॥ ८५ ॥

पित्रोर्यथोचितमथो सकलाः क्रियास्ताः<br>
कृत्वा प्रदाय वसु भूरि गजादिकानि ।<br>
रत्नानि दिव्यवसनानि तदा द्विजेभ्यो<br>
धर्मेण राज्यमकरोत्स हि देवचोलः ॥ ८६ ॥

निर्दुःखलेशमखिलाः सुखिताश्च लोकाः<br>
तस्मिन्प्रशासति धरां नरनायकेन्द्रे ।<br>
धर्माभिवृद्धिरभवत्सततं सुवृष्टिः<br>
सम्पन्नसस्यनिकरा पृथिवी बभूव ॥ ८७ ॥

कृत्वा शिवप्रियकरान् बहु कारयित्वा<br>
धर्मान् शिवैकशरणः स च देवचोलः ।<br>
राज्यं चकार सुखितः शिवभक्त एतत्<br>
तस्मै नमो हृदि करोमि शिवस्य दासः ॥ ८८ ॥

॥ इति श्रीविरूपाक्षविरचितं चोलचम्पूकाव्यं समाप्तम् ॥

॥ शिवाय नमः । [1]शिवार्पणमस्तु ॥

---

1. Repeated eight more times.

## ॥ अनुबन्धः ॥

बृहदीश्वरमाहात्म्ये कुलोत्तुङ्ग-देवचोल-चरित्रवर्णनम् ।

*                    *                    *

देवि चोलमहीपानां चरित्रं कथयामि ते ।
शृणुष्व सावधानेन सर्वेषां भक्तिदायकम् ॥

इति श्रीभविष्योत्तरमहापुराणे बृहदीश्वरमाहात्म्ये
तृतीयोऽध्यायः ।

सूतः—

शिवस्य गणपाः सर्वे संजाता भूतले नृपाः ।
भक्तिं कुर्वन्त ईशाने महादेवपदाम्बुजे ॥
राजानस्ते कीर्तिधनाः समरे जितशत्रवः ।
भस्मरुद्राक्षमालाढ्याः शिवभक्तार्चने रताः ॥
शिवलिङ्गार्चकाः सर्वे पुत्रैः पौरैः सहादरात् ।
ब्राह्मणार्चापराः सर्वे स्नानदानरताः सदा ॥
शिवस्थानानि चक्रुस्ते चोलभूमण्डले नृपाः।
जीर्णस्फुटितसन्धानकराः स्वायंभुवस्थले ॥
स्वतन्त्राण्यपि चान्यानि शिवधामानि ते नृपाः ।
प्राकारगोपुरादीनि तीर्थानि विविधान्यपि ॥
तीर्थतीराणि पुण्यानि बबन्धुश्चोलभूभुजः ।
वीर्यार्जितं सस्यजातं धनैश्चक्रुः शिवालयान् ॥
विप्राग्रहारनिपुणै(करणै)स्त्र(स्त्र)च्छत्र(सत्र)मठादिभिः ।
मार्गारोपणकैर्वृक्षैर्नदीसोपानमण्डनैः ॥

पुष्पमण्डपनिर्माणैर्महामण्डपविस्तरैः ।
शिवाज्ञया ते गणपा बभूवुश्चोलभूभुजः ॥

*  *  *

एवं वत्सरसाहस्रं कल्पादौ ते महीभुजः ।
अपालयंश्चोलभूमिं शिवकैङ्कर्यतत्पराः ॥
तेषां प्रत्येकशश्चित्रं चरित्रं कथयामि ते ।
शृणु त्वं सावधानेन शृण्वतां पापनाशनम् ॥

इति श्रीभविष्योत्तरे महापुराणे बृहदीश्वरमहिमायां (माहात्म्ये) चोलकैङ्कर्यकरणं नाम चतुर्थोऽध्यायः ।

मुनयः—

कथं षोडश चोलास्ते संभवन् (?) पृथिवीतले ।
शिवाज्ञया नस्तान् सूत कुत्र कुत्र स्थलेषु वै ॥
शिवकैङ्कर्यमातेनुस्तेषां नामानि नो वद ।
चरितं पापशमनं शिवभक्तमहीभुजाम् ॥
उक्त्वा श्रुत्वापि मेधावी शिवलोकं व्रजत्यसौ ।
मुनीनां वचनं श्रुत्वा तानाह प्राञ्जलिस्तदा ॥
प्रणम्य तान्नैमिशीयान् पुण्यं चोलचरित्रकम् ॥

सूतः—

शृणुध्वं मुनयः सर्वे नैमिशारण्यवासिनः ।
श्रुतं व्यासान्मया पूर्वं भविष्याख्ये पुराणि(ण)के ॥
शृणुध्वं चोलचरितं षोडशानां महीभुजाम् ।
शिवकैङ्कर्ययुक्तानां भस्मरुद्राक्षधारिणाम् ॥
सूर्यान्वयसमुद्भूतः कुलोत्तुङ्गो महीपतिः ।
स कश्चित् खर्वटग्रामे कृषिकर्मकरोऽभवत् ॥

तत्पत्नी कोमला नाम कोमलाङ्गी पतिप्रिया ।
पतिशुश्रूषणरता भर्तृवाक्यपरायणा ॥
विनयाचारवाग्दानैरन्नैरतिथिपूजका:(?) ।
एवं तयोः संवसतोः कालो भूयानगाद् द्विजाः ॥
शिवभक्तार्चनरतो:(नर्चयतो:) शिवलिङ्गं दिदृक्षतोः ।
काषायकन्थाधारी च भस्मरुद्राक्षभूषणः ॥
समभ्यर्चो(भ्यागात्) निशि गृहं कुलोत्तुङ्गस्य शङ्करः ।
तं समागतमालोक्य भस्मरुद्राक्षभूषणम् ॥
कुलोत्तुङ्गः प्रणम्याह तत्पत्नी विनयान्विता ।
बभाषे वचनं चारु तदा भक्तं प्रहर्षितः ॥

कुलोत्तुङ्गः—

एहि भक्त प्रसीदेति मद्गृहे भोजनं कुरु ।
तेन मे सफलं जन्म भविष्यति तवार्चनात् ॥
शिवस्य शिवभक्तस्य नान्तरं विद्यते प्रभो ।
तवार्चनाच्छिवस्तुष्टो भविष्यति न संशयः ॥
इत्युक्त्वाक्षाल्य तत्पादौ पीठे तमुपवेश्य च ।
तदङ्गं गन्धलेपेन पुष्पैश्चैव समार्चयत् ॥
षड्रसं भोजयामास भक्ष्यभोज्यसमन्वितम् ।
पुनः प्रक्षालनजलं दत्त्वा ताम्बूलमप्यथ ॥
शय्यायां तमुपानीय तत्पादौ मर्दयं (?) स्थितौ ।
तयोर्भक्तिं समालोक्य तावुवाच महेश्वरः ॥

ईश्वरः—

युवाभ्यां भक्तिभावेन निशि संपूजितोऽस्म्यहम् ।
तेन मे तृप्तिरतुला संजाता तव भाग्यतः ॥

पट्टबन्धं करिष्यामि तव चोलभुवस्त्वहम् ।
आषोडशान्वयं राज्यं तव दत्तं न संशयः ॥
तवान्वयोद्भवाः सर्वे मत्कैङ्कर्यपराः सदा ।
भविष्यन्ति महीपाला मम भक्ता न संशयः ॥
इत्युक्त्वा शङ्करस्तत्र सस्मार च धनाधिपम् ।
शिवस्य स्मृतिमात्रेण तत्रागाच्च धनाधिपः ॥
प्रणम्य साम्बं तद्गेहे किं करोमीत्युवाच ह ॥

इति भविष्योत्तरे महापुराणे बृहदीश्वरमाहात्म्ये
पञ्चमोऽध्यायः समाप्तः ।

ईश्वरः—

एतस्मिन् दण्डकारण्ये कुलोत्तुङ्गो महीपतिः ।
आषोडशान्वयं चास्य राज्यं दत्तं मयाधुना ॥
मदालयान् समुद्धर्तुं कर्तुं धामानि कृत्स्नशः ।
एतद्गेहे वसाद्य त्वं निधिभिर्धनपाधुना ॥
त्वया धनानि लब्धानि मदर्चातः शमीवने ।
[1]जप्येशाद्दक्षिणे भागे क्रोशमात्रस्थिते पुरा ॥
निराकृतो रावणेन कुबेर हृतपुष्पकः ।
निषादेन तपस्तप्तं तत्र स्थानोत्तमे त्वया ॥
आनन्दवल्ल्या तद्धेशस्तवाहं वरदोऽभवम् ।
निधीनामाधिपत्यं ते दत्तं त्वत्स्तोत्रपूजया ॥
तस्यां(स्याः) पुर्यां(र्याः) मया नाम दत्तं धनपते पुरा ।
[2]दक्षिणालकसंज्ञेषा धनधान्ययुता पुरी ॥

---

1. तिरुवैयारु
2. करन्दै

तस्यां तत्राधिपत्यं च दत्तं संवसतां नृणाम् ।
न दारिद्र्यं न पापानि प्रभवन्ति प्रधर्षितुम् ॥
धनधान्यसमृद्धिश्च तत्र संवसतां भवेत् ।
प्रसादः शङ्करस्यैव भवेत्तत्रेश्वरे क्षणात् ॥
आनन्दवल्ल्याः कृपया भवन्त्यानन्दनिर्भराः ।
मृतानां शिवसारूप्यं तस्मिन् स्थाने धनाधिप ॥
तत्रायं चोलराज्याय शीघ्रमेवाभिषिच्यताम् ।
त्वं धनैः पूरयाशु त्वमेनं राजानमुत्तमम् ॥
मद्भक्तं लक्षणोपेतं कुरु त्वं मकुटार्पणैः ।
दिव्याभरणवस्त्रैश्च चामरच्छत्रवीजनैः ॥
कुबेरोऽपि शिवस्याज्ञां गृहीत्वा चोलभूपतिम् ।
कोमलाङ्गीं कुलोत्तुङ्गं स्थाप्य सिंहासने तदा ॥
नवरत्नमयं पट्टं तत्काले प्रबबन्ध वै ।
अत्यर्कमकुटं दीप्तं हारकेयूरभूषणम् ॥
अङ्गरागं च रुचिरं तत्पत्न्यै तस्य सो ददौ ।
स्वयं साम्बो वृषारूढो गणबृन्दसमन्वितः ॥
सर्वैः सुरैः संवृतात्मा तदास्मै दर्शनं ददौ ।
स दृष्ट्वा देवदेवेशं कुलोत्तुङ्गो महीपतिः ॥
कोमलाङ्ग्या तदा पत्न्या प्रणम्य शिवपादयोः ।
तुष्टाव देवदेवेशं साम्बं चन्द्रकलाधरम् ॥

कुलोत्तुङ्गः—

नमस्ते देवदेवाय शितिकण्ठाय शंभवे ।
विश्वाय विश्वनाथाय प्रणतार्तिप्रणाशिने ॥

वेदवेदान्तवेद्याय भवाय भवहारिणे ।
विष्णुब्रह्मेन्द्ररुद्राणां कारणाय नमो नमः ॥
सर्वैश्वर्येण युक्ताय सर्वानन्दमयाय च ।
यत्ते दृष्टं पदाम्भोजं तेन धन्योऽस्मि शङ्कर ॥
नृपस्य वचनं श्रुत्वा तन्मूर्ध्नि स्वकरं दधत् ।
उवाच भगवान् शंभुः कुलोत्तुङ्गमहीपतिम् ॥

ईश्वरः—

गणश्रेष्ठोऽसि संजातो मद्भक्त्या भूतले नृप ।
न मे पदाब्जयोर्भक्तिं मापयिष्यः कदाचन ॥
चातुर्वर्ण्यं जनानां च रक्षणात् प्रीतिरस्ति मे ।
स्वायम्भुवानां स्थानानां समुद्धर्तुं कृतो नृपः ॥
मया षोडशवंश्यानां त्वद्भवानां महीपते ।
आदिमस्त्वं चोळकुले कुलोत्तुङ्गो भविष्यसि ॥
तव दातुं नव निधीन् शिवकैङ्कर्यहेतवे ।
साहाय्यकर्ता सततं कुबेरस्ते भविष्यति ॥
शिल्पिनां प्रवरो राजन् विश्वकर्मापि मानुषः ।
भविष्यति सहायस्ते कैङ्कर्ये शिवधामसु ॥
मानुषेषूपपद्येत तवाज्ञाकारकः सदा ।
मनुर्मयो विश्वकर्मा धाता चैव विधातकः ॥
सर्वशिल्पवतां श्रेष्ठाः भविष्यन्ति महीतले ।
तेन स्थानानि मे राजन् कावेर्युभयतस्तटे ॥
स्वायंभुवानि देवानि कुरुष्वार्षोद्धृतिं नृप ।
शिवकैङ्कर्यकरणात् वासः कैलास एव हि ॥
विश्वकर्माणमाहूय शिवो वाक्यमुवाच ह ॥

शिवः—

पञ्चभिः शिल्पिभिः सार्धं मानुषो भव भूतले ।
कुरु धामानि दिव्यानि शिल्पशास्त्रोक्तमार्गतः ॥
आषोडशान्वयं भूपा भविष्यन्त्यस्य वंशजाः ।
तावत्कालं वसाद्यैव त्वं वंशक्रमतो भुवि ॥
धनदो धनदानेषु त्वं च शिल्पे नियोजितः ।
उभौ प्रकुरुतां राज्ञः शिवधाम्नि सहायकम् ॥
कुबेरोऽपि धनं कामं प्रदास्यति महीपते ।
भूमौ निखननाद्द्रव्यं यावदिच्छं ददे तव ॥
उवाच विश्वकर्माथ प्रणम्य परमेश्वरम् ॥

विश्वकर्मा—

तव कैङ्कर्यकरणान्मच्छिल्पं पावनीकृतम् ।
करिष्याम्यस्य साहाय्यं त्वदाज्ञां को विलङ्घयेत् ॥
कुबेरोऽपि महादेवं प्रणिपत्याह साञ्जलिः ॥

कुबेरः—

नवभिर्निधिभिः सार्धं यावच्चोलावनीश्वराः ।
कुर्वन्ति शिवकैङ्कर्यं धनं तावद्ददाम्यहम् ॥
त्वदाज्ञया महादेव निधयः सार्थका मम ।
खनन्ति गां यत्र चोलाः शिवधाम्ने धनार्थिनः ॥
वसुन्धरायामन्वर्थं दर्शयामि निधीन्नव ।
प्रणम्य विश्वकर्माथ शिवाज्ञां शिरसाग्रहीत् ॥
राजा संतुष्टहृदयः प्रणम्येशं नतः स्थितः ।
शिवश्चादर्शनं प्राप्तः स्वप्नवद्दृश्यते नृपः ॥

इति श्रीभविष्योत्तरे महापुराणे कुलोत्तुङ्गचोलचरिते
षष्ठोऽध्यायः ।

सूतः—

कुलोत्तुङ्गस्ततः प्रातर्दृष्ट्वा मकुटपट्टकम् ।
खनकैः खानयामास स्वगृहे गृहनिष्कुटम् ॥
तत्र लब्ध्वा बहुधनं तेनाश्वगजसैनिकान् ।
स्वभृत्यान् स्थापयामास वशीचक्रे भुवं तदा ॥
स राज्यमखिलं शासन्निहतारिः स भूपतिः ।
कान्ताराञ्छेदयामास कावेर्यास्तटसंरुहान् ॥
शतं मुखानि कावेर्यास्तीरस्थान्यालयान्यपि ।
उद्धर्तुकामो नृपतिः शिवदत्तधनेन वै ॥
श्रीकण्ठेशालयं पुण्यं चक्रे राजा शिवालयम् ।
मातृभूतेश्वरस्याथ तथा रत्नगिरीशितुः ॥
तथोन्नतं च विघ्नेशं स्थापयामास पर्वते ।
सुगन्धिकुन्तलाम्बायास्तथालयमनुत्तमम् ॥
तृणज्योतीश्वरस्यैव तथा मरतकाचलम् ।
शिल्पिभिः कारयामास जीर्णोद्धारं शिवालयम् ॥
अखिलाण्डमहादेव्यास्तथा जम्बूपतेः प्रभोः ।
गर्भागारं गोपुराणि प्राकाराणि व्यधान्नृपः ॥
महाप्राकारमेवैकं शिवभूतिप्रदानतः ।
कारयामास शिल्पज्ञैरुन्नतं भासुरं तदा ॥
श्रीरङ्गसंज्ञिकस्यापि दिव्यालयमथाकरोत् ।
जम्बूनाथक्षेत्रगुणं दृष्ट्वा शिश्ये हरिः स्वयम् ॥
प्रणिपत्य महादेवमखिलाण्डेश्वरीं शिवाम् ।
तथा दक्षिणगोकर्णमथस्थात् (धस्तात्) पर्वतेऽपि च ॥

शिवालयद्वयं चक्रे शिल्पिभिर्दृषदा नृपः ।
तथान्यान्यपि पुण्यानि ह्यालयानि महेशितुः ॥
कारयामास देवस्य घृतस्थानेश्वरस्य च ।
श्रीमत्पञ्चनदीशस्य गर्भागारं च गोपुरम् ॥
प्राकारं कारयामास श्रीप्रयाणेश्वरालयम् ।
शमीवनं समागत्य यत्र तेपे पराशरः ॥
कुबेराय प्रसन्नोऽभूद्यत्र तञ्जापुरेश्वरः ।
यत्रानन्दमहावल्ली देवी तञ्जासुरं रणे ॥
निधायाष्टमहाशक्तीरष्टदिक्ष्वपि तत्र वै ।
एकवीरा जयन्ती च मर्दिनी महिषार्दिनी ॥
मारीच(ची) रेणुका काली कोटी च परितः स्थिताः ।
शूलेन पातयामास तञ्जं तन्नामतः पुरम् ॥
प्रार्थयामास तां देवीं स्वस्य प्रख्यातिहेतवे ।
वसिष्ठः पूजयामास तदीशान्यां महेश्वरीम् ॥
कृत्वा तीर्थं च तत्रैव स्वनाम्ना मुनिपुङ्गवः ।
तद्दक्षिणे वैद्यनाथो देव्या सन्निहितः सदा ॥
सादिरूपेण देवेशः पुष्पमालाधरो हरः ।
तन्नैर्ऋते देवतीर्थं स्नातानां सर्वकामदम् ॥
तत्र लिङ्गं महादेव्या स्थितं करतलेश्वरम् ।
तञ्जेश्वरात् प्रतीच्यां च नीलमेघं हरिं तथा ॥
नृसिंहं च तदा राजा दृष्ट्वा वै कोङ्कणेश्वरम् ।
यत्र कोङ्कणसिद्धाय प्रसन्नः पार्वतीपतिः ॥
स्थलमत्स्यद्भुतं दृष्ट्वा तत्र तत्रालयं व्यधात् ।
तञ्जेश्वरस्य देवस्य प्राकारं गोपुरं तथा ॥

आनन्दवल्लीदेव्याश्च सुधापुष्करिणीतटम् ।
शिल्पिभिः कारयामास कुलोत्तुङ्गो महीपतिः ॥
एवं नवतिवर्षाणि शिवकैङ्कर्यमातनोत् ।
प्रजाश्च पालयामास चातुर्वर्ण्यं महीपतिः ॥
मठान्नदानकरणैरग्रहारानुपालनैः ।
महापूजोत्सवादीनि शिवधामसु वै नृपः ॥
कारयामास नियमाद् देवचोलं सुतं तदा ।
अभिषिच्य स्वके राज्ये पत्न्या प्राप शिवान्तिकम् ॥
कुलोत्तुङ्गस्य चरितं भक्तस्याथ महीपतेः ।
उक्त्वा श्रुत्वापि मेधावी सर्वपापैः प्रमुच्यते ॥

इति श्रीभविष्योत्तरे महापुराणे कुलोत्तुङ्गचरिते
बृहदीश्वरमहिमायां (माहात्म्ये)
सप्तमोऽध्यायः ।

सूतः—

देवचोलस्ततोऽमात्यैर्धर्मतः पालयन् महीम् ।
तत्र कामिकवंशीयां भार्यां सौन्दर्यवल्लिकाम् ॥
शिवार्चां कारयामास पितृवन्नृपनन्दनः ।
शिवालयानि भूरीणि शिल्पिभिर्द्रव्यदानतः ॥
मध्यार्जुनं कुम्भघोणं श्वेतारण्यं द्रुतिस्थलम् ।
श्रीवाञ्छ्यं मङ्गलेशानं कुद्दालं दुर्गकेश्वरम् ॥
एतानि शिवधामानि ह्यग्रहारांश्च भूरिशः ।
कृत्वा राजा महाबाहुः लेभे शैवं पदं ततः ॥
षष्टिवर्षाणि नृपतिर्धर्मतः परिपाल्य गाम् ॥

*　　*　　*

इति श्रीभविष्योत्तरे महापुराणे देवचोल-शशिशेखरचोलचरिते(तं नाम)
अष्टमोऽध्यायः ।